# दुर्वाससाविरचितं श्रीशक्तिमहिम्न अथवा त्रिपुराम्बिकामहिम्नस्तोत्रम्

श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा-
सौन्दर्यार्णवमन्थनोद्भव सुधाप्राचुर्यवर्णोज्ज्वलम् ।
उद्यद्भानुसहस्रनूतनजपापुष्पमभं ते वपुः
स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम् ॥ १८॥

आदिक्षान्तसमस्तवर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षो(क्ष्यो)न्नते ।
ब्रह्माण्डाब्जवरासने जननि ते मूर्तिं भजे चिन्मयीं
सौषुम्नायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम् ॥ १९॥

वन्देवाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो
भाषा देशसमुद्भवा पशुगता (पशुगताः) छन्दांसि सप्तस्वरान् ।
तालान् पञ्च महाध्वनीन् प्रकटयत्यात्मप्रसारेण यत्
तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥ २०॥

त्रैलोक्यस्फुटमन्त्रतन्त्र महिमां नाप्नोति शश्वद्विना
(त्रैलोक्यस्फुटमेत्रमन्त्रमहिम स्वात्मोक्तिरूपं विना)
तद्बीजं (यद्बीजं) व्यवहारजालमखिलं नास्त्येव मातस्तव ।
तज्ज्ञाप्यस्मरणप्रसक्तसुमतिस्सर्वज्ञतां प्राप्य कः
शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिस्स्पर्धते ॥ २१॥

मात्रा यत्र विराजतेति विशदा तामष्टधामातृकां
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्वविन्मन्वते(मन्यते) ।
सोऽविद्याखिलजन्मकर्मदुरितारण्य प्रबोधाग्निना
(सा विद्याऽखिलजन्मकर्मदुरितानीत्थं प्रबोधाग्निना)
भस्मीकृत्य विकल्पजालमखिलं मातः पदं तद्व्रजेत् ॥ २२॥

(भस्मीकृत्य विकल्पजालरहितो मातः पदं ते भजेत्) ॥ २२॥

यत्ते मध्यमबीजमम्ब कलयाम्यादित्यवर्णं क्रिया-
ज्ञानेच्छादिमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् ।
उत्पत्तिस्थितिकल्पकल्पिततनुं स्वात्मप्रसारेण यत्
काम्यं ब्रह्महरीश्वरादिविबुधैः कामक्रियायोजितैः ॥ २३॥

(यत्ते मध्यमबीजमम्ब कलयेमादित्यवर्णं क्रिया-
ज्ञानेच्छासुखदुःखकल्पित तनु स्वात्मप्रसारेण यत् ।
काम्यं ब्रह्महरीश्वरादि विबुधैः कामक्रियायोजितैः
कामं कारणतां गता नगणिताङ्कार्यैरनेकैर्महि) ॥ २३॥

कामं कारणतां गतानगणितान्कार्यैरनेकैर्मही-
मुख्यैस्सर्वमनोगतानधिगतान्मानैरनेकैस्स्फुटम् ।
कामक्रोधसुलोभमोहमदमात्सर्यादिषड्कञ्च यद्बीजं
भ्राजयति (राजयति) प्रणौमि तदहं ते साधु कामेश्वरि ॥ २४॥

यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महा-
जाड्यध्वान्तनिवारणैकतरणि ज्योतिर्विबोधप्रदम् ।
यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृत्तत्कामराजं भजे ॥ २५॥

(श्रीविद्ये तव सर्वराजवशकृच्छ्रीकामराजं भजे) ॥ २५॥

यत्ते देवि तृतीयबीजमनलज्वालावलीसन्निभं
सर्वाधार तुरीयबीजपरमं (तुरीयशक्तिपरं) ब्रह्माभिधाशब्दितम् ।
मूर्धन्यान्तविसर्गभूषितमहोङ्कारात्मकं तत्परं
संविद्रूपमनन्यतुल्यमहिमं स्वान्ते मम द्योतताम् ॥ २६॥

अगुप्ता गुप्तायास्स्वयमपि महान्तोऽपि लघव-
स्सकीला निष्कीला गुरुभिरुपदिष्टा अपि तव ।
प्रसन्नायां देवि त्वयि सकलमन्त्रार्थफलदा
तरोर्मूले सिक्ते विलति खलु शाखाशततमी ॥ २७॥

सर्वं सर्वत एव सर्वविषये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीककर्मभिरिदं सव्यस्तुवानापरा ।
वागर्थव्यवहारकारणतनुश्शक्तिर्जगद्व्यापिनी
यद्बीजात्मकतां गता तव शिवे तं नौमि बीजं परम् ॥ २८/२७॥

अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी
शक्तिर्ब्रह्महरीश(हरीन्द्र)वासवमुखामर्त्यासुरात्म(सुरान्त)स्थिता ।
सृष्ट(दृष्ट्वा , दृष्टा)स्थावरजङ्गमस्थितमहाचैतन्यरूपा च या
यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिके(का) ॥ २९/२८॥

स्वात्मश्रीविजिताजविष्णुमघवच्छ्रीपूरणैकव्रतं
तद्विद्याकविताविताललहरीकल्लोलिनीदीपकम्(दीपितम्) ।
बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिनः
शान्ता नित्यमुपासते तदिह ते चित्ते दधे श्रीपरे(श्रीपुरे) ॥ ३०/२९॥

ब्रह्मायोनिरमासुरेश्वरसुहृल्लेखाभियुक्तैस्तथा
मार्ताण्डेन्दुमनोभवाभवसुधीमायाभीरुद्राश्रितैः ।
सोमाम्बुक्षितिशक्तिभिः प्रकटितैर्वर्णाङ्गवेदक्रमैः
वर्णैश्श्रीशिवदेशिकेन विदितां विद्यां तवाम्ब श्रये ॥ ३१/- ॥

एकैकं तब मातृके परतरे संयोगि वा (संयोगिनो) योगि वा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् ।
यन्निष्ठाश्चमहोत्पलासनमहाविष्णुप्रहर्तादयो
देवास्स्वेषु विधिष्वनन्यमहिमस्फूर्तिं देधे तेऽपि (दधत्येव) तत् ॥ ३२/३०॥

इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुरत्(स्मतरत्)
शक्त्याख्यानि चतुश्श्रुतिप्रकटितान्युत्कृष्टकूटानि ते ।
भूतर्तु(र्तुः)श्रुतिसङ्ख्यवर्णविदितान्यारक्तकान्ते शिवे
यो जानाति स एव सर्वजगतां सृष्टस्थितिध्वंसकृत् ॥ ३३/३१॥

नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपे-
त्सम्पूज्याक्षर(त्सम्पूज्याखिल)चक्रराजनिलयां सायन्तनाग्निमभाम् ।
कामाख्यं शिवनामतत्वमुभयं व्याप्यात्मनां(ना) सर्वतो
दीव्य(प्य)न्तीमिह तस्य सिद्धिरचिरात्स्याद्यस्वरूपैक्यता ॥ ३४/३२॥

काव्यैर्वा पठितैः किमल्प(प्य)विदुषो घो(जो)घुष्यमाणैः पुनः
किं तैर्व्याकरणैर्विबोधिततया किं वाभिधानश्रिया ।
एतैरम्बनबोभवीति सुकविस्तावत्तव श्रीमतो
(एतैरेव न बोभवीति कविता वृत्तैर्वचःश्रीमतो)
यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम् ॥ ३५/३३॥

गेहं नाकति गर्वितः प्रणमति स्त्रीसङ्गमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवना-
त्त्वां वन्दे भवभीतिभञ्जनकरीं गौरी गिरीशप्रियाम् ॥ ३६/३४॥

आद्यैरग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभि-
र्मिश्रारक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः ।
स्वात्मोत्पादित (आत्मोद्भासित) काललोकनिगमावस्थामरादि-
त्रयैरुद्भूतं (त्रयं तद्भूतं) त्रिपुरेति नाम कलयेयस्ते स धन्यो भवेत् ॥ ३७/३५॥

आद्यो जाप्यतमार्थवाचकतया रूढस्स्वरः पञ्चम-
स्सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्णात्मकः (पवर्गान्तकः) ।
वक्त्रत्वेन महाविभूतिसरणिस्त्वाधारगोहृद्रतो
भ्रूमध्ये स्थित इत्यतः प्रणवतां ते गीयतेऽम्बागमैः ॥ ३८/३६॥

गायत्री सशिरा तुरीयसहिता सन्ध्यात्रयी त्वा(त्या)गमै-
राख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् ।
तत्तद्दर्शनमुख्यशक्तिरपि च त्वं कर्मब्रह्मेश्वरी
कर्ताहं पुरुषो हरिश्च सविता बुद्धश्शिवस्त्वं गुरुः ॥ ३९/३७॥

अन्नप्राणमनः प्रबोधपरमानन्दैश्शिरःपक्षयु-
क्पुच्छात्मप्रकटैर्महोपनिषदां वाक्यैः प्रसिद्धीकृतैः ।
कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रलीनामिति
ज्योतिःप्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥ ४०/३८॥

सच्चित्तत्वमसीति वाक्यविदितैरध्यात्मविद्या शिवे
ब्रह्माख्यैरतुलप्रभावजनकैस्तत्वैस्त्रिभिस्सद्गुरोः ।
त्वद्रूपस्य मुखारविन्दकुहरात्सम्प्राप्य दीक्षामतो
यस्त्वां विन्दति तत्त्वतस्त(स्त्व)दह(मह)मित्यार्ये स मुक्तो भवेत् ॥ ४१/३९॥

सिद्धान्तैर्बहुभिः प्रमाणगणितैर(तैल)न्यैरविद्यातमो-
नक्षत्रैरिव सर्वमन्धतमसं तावन्न निर्भिद्यते ।
यावत्ते सवितैव सम्मतमिदं नोदेति विश्वान्तरे
जन्तोर्जन्मनिवारणैकभिदुरं श्रीशाम्भवि श्रीशिवे ॥ ४२/४०॥

आत्मासौ सकलेन्द्रियाश्रयमतो(नो) बुद्ध्यादिभिश्शोचितः
कर्माबद्धतनुर्जनिञ्च मरणं(रमणं) प्राप्नोति यत्कारणात् ।
यत्ते (तत्ते) देवि महाविलासलहरीविद्यायुधा(सुधा)नां जय-
स्तस्मात्त्वां गुरुमभ्युपेत्य कलये त्वामेव चेन्मुच्यते ॥ ४३/४१॥

नानायोनिसहस्रसम्भववशाज्जाता जनन्यः कति
प्रख्याता जनकाः कियन्त इति मे सत्स्यन्ति(सेत्स्यन्ति) चाग्रे कति ।
एतेषां गणनैव नास्ति महतस्संसारवारान्निधे-
र्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ॥ ४४/४२॥

देहक्षोभकरैर्व्रतैर्बहुविधैर्ध्यानैश्च होमैर्जपैः
सन्तानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः ।
यत्सङ्कल्पविकल्पजालमलिनं(मिलितं) प्राप्तं पदं तस्य ते
दूरादेव निवर्तते परतरं मातः पदं निर्मलम् ॥ ४५/४३॥



पञ्चाशन्निजदेहजाक्षरभवैर्नानाविधैर्धातुभिः

बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः ।
साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं
विश्वं व्याप्य चिदात्मना(ऽ)हमहमित्युज्जृम्भसे मातृके ॥ ४६/४४॥

श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं
विख्यातं तदधिष्ठिताक्षर शिवज्योतिर्मयं सर्वतः ।
एतन्मन्त्रमयात्मिकाभिररुणश्रीसुन्दरीभिर्वृते(तं)
मध्ये बैन्दवसिह्मपीठललिते त्वं ब्रह्मविद्ये शिवे ॥ ४७/४५॥

आताम्रार्कसहस्रदीप्तिसुषुमासौन्दर्यसारैरलं
लोका(काला)तीतमहोदयैरुपचितैस्सर्वोपमागोचरैः ।
नानारत्नविभूषणैरम(ग)णितैर्जाज्वल्यमानाभित-
स्त्वं (त्वं) मातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवासं मम ॥ ४८/४६॥

बिन्दुप्राणविसर्गजीवसहितं बिन्दुत्रिजीवात्मकं
षट्कूटा विनिपर्यया निगदिता तावत्त्रिबालार्बला ।
एभिस्सम्पुटितं प्रजप्य विहरेत्प्रासादमन्त्रं परं
गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्रदम् ॥ ४९/- ॥

शिञ्जन्नूपुरपादकङ्कणमहामुद्रासुलाक्षारसा-
लङ्काराङ्किन्तमङ्घ्रिपङ्कजयुगं श्रीपादुकालङ्कृन्तम् ।
उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासन्निभं
ब्रह्मादित्रिदशा(शैः) मुरार्चितमिदं (समार्चितपदं) मूर्ध्नि स्मराम्यम्बिके ॥ ५०/४६॥

आरक्त(च्)छविनातिमार्दवयुजा निः(नि)श्वासहार्येण य
त्कौशेयेन(यैर्न) वि(व)चित्ररत्नघटितैर्मुक्ताफलैरुज्वलैः ।
कूजत्काञ्चनकिङ्किणीभिरभितस्सन्नद्धकाञ्चीगुणे-
रादीप्तं सुनितम्बबिम्बमरुणं ते भावयाम्यम्बिके ॥ ५१/४७॥

कस्तूरीघनसारकुङ्कुमरजोगन्धोत्कटैश्चन्दनै-
रादी(लि)प्तं मणिमालया विरचित(सुरुचिर)ग्रैवेयहारादिभिः ।
दीप्तं दिव्य (दीप्यद्दिव्य) विभूषणैर्जननि ते ज्योतिर्विभास्वत्कुच-
व्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतं भजे ॥ ५२/४८॥

मुक्तारत्नसुवर्णकान्तिललितास्ते बाहुवल्लीरहं
केयूरोत्तमबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैः ।
संवृत्ताः (सम्पृक्ताः) कलयामि हीरमणिमन्मुक्ताकलापीकृतं
ग्रीवापट्टविभूषणेन सुभगं कण्ठञ्च कम्बुश्रियम् ॥ ५३/४९॥

उद्यत्पूर्णकलानिधीश(श्रि)वदनं भक्तप्रसन्नं सदा
सम्फुल्लाम्बुजपत्रकान्तिसुषुमाधिक्कारदक्षेक्षणम् ।
सानन्दं कृतमन्दहासमसकृत्प्रादुर्भवत्कौतुकं
कुन्दाकारसुदन्तपङ्क्तिरुचिरं पूर्णं स्मराम्यम्बिके ॥ ५४/५०॥

तप्तस्वर्णकृतोरुकुण्डलयुगं माणिक्यमुक्तोल्लस-
द्धीराबद्धमनन्यतुल्यमपरं हैमञ्च चक्रद्वयम् ।
शुक्राकारनिकारदक्षममलं मुक्ताफलं सुन्दरं
बिभ्रत्कर्णयुगं भजामि ललितं नासाग्रभागं शिवे ॥ ५५/५१॥

जातीचम्पककुन्दकेसर महागन्धोत्किरत्केतकी- (महागन्धोत्करं केतकी)-
नीपाशोकशिरीषमुख्यकुसुमप्रोत्तंसिता धूपिता(ताः) ।
आनीलाञ्जननी(ली)लमत्तमधुपश्रेणी च वेणी तव


BACK TO TOP

श्रीमातश्श्रयतां मदीयहृदयाम्भोजे सरोजालये ॥ ५६/५२॥

लेखालभ्यविचित्ररत्नघटितं हैमं किरीटोत्तमं
मुक्ताकाञ्चनकिङ्किणीगणमहाहीरप्रबन्धोज्वलम् ।
चञ्चच्चन्द्रकलाकलापललितं देवद्रुपुष्पार्चितं
माल्यैरेवविलम्बितं सुशिखरं विभ्रच्छिरस्ते भजे ॥ ५७/५३॥

प्रोक्षिप्तोच्चसुवर्णदण्डललितं पूर्णेन्दुबिम्बाकृतिं
चक्रं (छत्रं) मौक्तिकरत्नचक्रकलितं क्षौमांशुकोत्तंसितम् ।
मुक्ताजालविलम्बितं सकलशं नानाप्रसूनार्चितं
चन्द्रोड्डामरचामरालि दधती(तीः) श्रीदेवि ते स्वस्त्रियः ॥ ५८/५४॥

विद्यामन्त्ररहस्यविन्मुनिगणैः क्लृप्तोपचारार्चनां
देवादिस्तुतिगीयमानचरितां वेदान्दतत्वात्मिकाम् ।
सर्वास्ताश्च तुरीयतामुपगतास्त्वद्रश्मिदेव्यः परा
स्तन्नित्यं (स्त्वां नित्यं) समुपासते स्वविभवैश्श्रीचक्रनाथे शिवे ॥ ५९/५५॥

शृङ्गारादिरसालयं त्रिभुवनं(नी) माल्यैरनेकैर्वृतं
सर्वाङ्गीणसदङ्गरागसुरभि श्रीमद्वपुर्धूपितम् ।
ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुष्टं वह-
त्फालं नन्दनचन्दनेन सुरभि ध्यायामि ते मङ्गलम् ॥ ६०/५६॥

एवं यस्स्मरति प्रबुद्धसुमतिश्श्रीमत्स्वरूपं परं
वृद्धो(ऽ)प्याशु युवाभवत्यनुपमस्त्रीणामनङ्गायते ।
स्पष्टै(सोऽष्टै)श्वर्यतिरस्कृताखिलसुरश्रीजृम्भितात्मालयः
पृथ्वीपालकिरीटकोटिवलिभिर्नीराजिताङ्घ्रिर्भवेत् ॥ ६१/५७॥

अथ तव धनुः पुण्ड्रेक्षुकृतप्रसिद्धमणिद्युति
(अथ तव धनुः पुष्पेषुत्व प्रसिद्धमणिद्युति)
त्रिभुवनबधूमोहज्योत्स्नाकलानिधिमण्डलम् ।
अखिलजननि स्मारंस्मारं गतस्मरताञ्जन-
स्त्रिभुवनवधूमोहाम्बोधेः प्रपूर्णविधुर्भवेत् ॥ ६२/५८॥

(स्त्रिभुवनवधूमोहे बभ्रे प्रपूर्णविधुर्भवेत्) ॥ ६२/५८॥

प्रसूनशरपञ्चक(चम्पक)प्रकटगुम्फनागुम्फितं
त्रिलोकमवलोकयत्यमलचेतसां चञ्चलम् ।
अशेषरमणीजनस्मरविजृम्भणं यस्सदा
पटुर्भवति ते शिवे त्रिजगदङ्गनाक्षोभणे ॥ ६३/५९॥

पाशं प्रपूरितमहासुमतिप्रकाशं
यो वा तव त्रिपुरसुन्दरि सुन्दरीणाम् ।
आकर्षणेऽखिलवशीकरणे प्रवीण-
श्चित्तेवसन् स भुवनत्वयवश्यकृत्स्यात् ॥ ६४/६०॥

यस्स्वान्ते कलयति कोविदस्त्रिलोकी-
स्तम्भारम्भणवेक्षणकृत्यु(मत्यु)दारवीर्यम् ।
मातस्ते विजयतां कुशं सयोषा (स योषां)
देवास्तं भजति (देवां स्तम्भयति) च भूभुजोऽत्र सैन्यम् ॥ ६५/६१॥

पाशध्यानवशाद्भवेद्भवमहामोहाम्भसोज्जृम्भणं
प्रख्यातप्रव्यवेषु चिन्तनवशात्तत्तच्छरव्यं सुधीः ।

चापध्यानवशात्समस्तजगतां मृत्योवेशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मननान्मायाममेयां तरेत् ॥ ६६/- ॥

(पाशध्यानवशात्समस्तवशता मृत्योर्वशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मनसा मायाममेयां तरेत् ।
पाशाध्यानवशाद्भवेद्भवमहामोहाम्भसो जृम्भणं
प्रख्यातप्रसवेषुचिन्तनवशात्तत्तच्छरव्यं सुधीः) ॥ -/६२॥

न्यासं कृत्वा गणेशं ग्रहगणमहायोगिनीराशिपीठैः
पञ्चाशन्मातृकार्ण(र्णैः) सहितबहुकलैरष्टवाग्देवताभिः ।
सश्री(स स्त्री) कण्ठादियुग्मैर्निजविमलतनौ केशवाद्यैश्च तत्वै-
षड्त्रिंशक्त(द्भिर्धराद्यै)माद्यैर्भगवति भवतीं यस्स्मरेत्स त्वमेव ॥ ६७/६३॥

भगवति तव पादपद्मातिसद्माविक श्री
स्त्रिजगति परिहृत्य भद्राय निद्रादिषु ।
अलि इति कलनादसङ्गीतभङ्गीकृते
परिमलमिह किन्तु वन्देति सन्देहितः ॥ ६८/- ॥

सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः
प्रभवति निजगेहे यस्य देवत्वमार्ये ।
विधृतबहुकलानां पात्रभूतस्य तस्य
त्रिभुवनविदिता सा जृम्भिता कीर्तिरच्छा ॥ ६९/६४॥

मातस्त्वं भूर्भुवस्वर्महिततमतनुस्त्वन्तरिक्षं न सूर्यो
(मातस्त्वं भूर्भुवःस्वर्महिततमतनुं त्वन्तरिक्षेन्दुसूर्यै-)
राज्ञी(ज्ञा) शुक्रेन्द्रवह्नीन्दुभिरपि निगमब्रह्मभिः प्रोतशक्तिः (क्तिं) ।
प्राणापानादियुक्तैः (ग्मै) कलयति सकलं मानसं(से) ध्यानयोगा-
द्येषां तेषां सपर्या भवति सुरकृता ब्रह्मता (ब्रह्म ते) योग्यता (जानते) च ॥ ७०/६५॥

क्व मे बुद्धिर्वाचः परमविदुषो मन्दसरणिः
क्व ते मातर्ब्रह्मप्रमुखविबुधस्वान्तवचसाम् ।
(क्व ते मातर्ब्रह्मप्रमुखविबुधाः स्वान्तवचसः ।)
अभूमा विष्फूर्तिः परतरमहिम्नस्तव नुतौ
प्रसीद क्षन्तव्यं बहुलतरचापल्यमपि मे ॥ ७१/६६॥

प्रसीद परदेवते मम हृदि प्रभूतं भयं
निवारय दरिद्रतां दलय देहि सर्वज्ञताम् ।
विधेहि करुणानिधे शिरसि पादयुग्मं स्वकं
विदारय जरामृतिं(ती) त्रिपुरसुन्दरि श्रीशिवे ॥ ७२/६७॥

(फलम्) -
इति त्रिपुरसुन्दरीस्तुतिमिमां पठेद्यस्सुधीः
स सर्वदुरिताटवीपटलचण्डदावानलः ।
लभेन्मनसि वाञ्छितं प्रचुरसिद्धिरिद्धिर्भवे-
दनेकविधसम्पदां पदमनन्यतुल्यो भवेत् ॥ ७३/६८॥

सङ्गीतं सरसं कवित्वसरणिं आम्नायवाक्यस्मृती- (चाप्राणवाचा श्रुति-)
व्याख्यानं हृदि तावकीनचरणद्वन्द्वञ्च सर्वज्ञतां (सर्वज्ञाम्) ।
श्रद्धां (श्रेष्ठे) कर्मणि कालिके तव बलं श्रीजृम्भणं मन्दिरे
सौन्दर्यं वपुषि प्रकाशमतुलं अम्बेश्वरि (प्राप्नोति) श्रीशिवे ॥ ७४/६९॥


पृथ्वीपालप्रकटमकुटस्रग्रजोरञ्जिताङ्घ्रिः

विद्वत्पूजानातेमातेसमाराधितो बाधितारेः ।
विद्यास्सर्वाः कलयति हृदा भासयन्ति प्रभाभिः
लोकास्सर्वे नवनवपदैरिन्दुबिम्बप्रकाशैः ॥ ७५/७०॥

भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकार(कौमार) तेजाः
सुज्ञानं भूरिमानं दिनकरललितं दुर्गमं योगमार्गम् ।
आयुष्पञ्चाष्टसिद्धिं हरगिरिविशदां कीर्तिमभ्येत्यभूमौ
देहान्ते ब्रह्मपारं परमशिवचिदाकारमभ्येति विद्वान् ॥ ७६/७१॥

उच्चेषु नीचेष्वपि दर्शनेषु प्रकाशते देवि तव स्वरूपम् ।
समुज्वलन्त्येव हि यज्ञवाटे चण्डालवेश्मन्यपि जातवेदाः ॥ ७७/७२॥

॥ इति शिवरहस्यान्तर्गते भवाख्ये दुर्वाससाविरचितं
त्रिपुराम्बिकामहिम्नस्तोत्रं सम्पूर्णम् ॥

श्रीशक्तिमहिम्नस्तोत्रम् ॥

देवीमहिम्नस्तुतिः
त्रिपुराम्बिकामहिम्नस्तवः

- ॥ श्रीशिवरहस्यम् । भवाख्यः द्वितीयांशः । अध्यायः २९॥

- .. shrIshivarahasyam . bhavAkhyaH dvitIyAMshaH . adhyAyaH 29..

Notes:
Shloka-numbering and number of shloka-s have been found to differ amongst the two referenced source texts, and have been integrated on this page.

Proofread by DPD, Ruma Dewan

```
% Text title            : shaktimahimnastotra evam tripurAmahimnastotra from Shivarahasya
% File name             : shaktitripurAmahimnastotra.itx
% itxtitle              : shaktimahimna vA tripurAmahimnastotram (shivarahasyAntargatam) durvAsasAvirachi
% engtitle              : Shri Shaktimahimna or Shri Tripuramahimna stotram
% Category              : devii, otherforms, stotra, devI, dashamahAvidyA, shivarahasya
% Location              : doc_devii
% Sublocation           : devii
% SubDeity              : dashamahAvidyA
% Texttype              : stotra
% Author                : Durvasa
% Language              : Sanskrit
% Subject               : philosophy/hinduism/religion
% Transliterated by     : DPD
% Proofread by          : DPD, Ruma Dewan
% Description-comments  : shrIshivarahasyam | bhavAkhyaH dvitIyAMshaH | adhyAyaH 29||
% Indexextra            : (Scans 1, 2, 3, 4, 5)
% Latest update         : April 5, 2013, September 15, 2023
% Send corrections to   : sanskrit at cheerful dot c om
% Site access           : https://sanskritdocuments.org
```